॥ श्रीमार्गसहायलिङ्गस्तुती ॥

॥ श्रीमद् अप्पय्यदीक्षितेन्द्रैः विरचिता ॥

पयो-नदीतीर निवासलिङ्गं बालार्क-कोटि प्रतिमं त्रिनेत्रम् ।
पद्मासनेनार्चित दिव्यलिङ्गं वन्दामहे मार्गसहायलिङ्गम् ॥ १॥

गङ्गातरङ्गोल्लसदुत्तमाङ्गं गजेन्द्र-चर्मांबर भूषिताङ्गम् ।
गौरी-मुखांभोज-विलोल-भृङ्गं वन्दामहे मार्गसहायलिङ्गम् ॥ २॥

सुकङ्कणीभूत महाभुजङ्गं संज्ञान-संपूर्ण-निजान्तरङ्गम् ।
सूर्येन्दु-बिंबानल-भूषिताङ्गं वन्दामहे मार्गसहायलिङ्गम् ॥ ३॥

भक्तप्रियं भावविलोलभृङ्गं भक्तानुकूलामल भूषिताङ्गम् ।
भावैक-लोक्यान्तरमादिलिङ्गं वन्दामहे मार्गसहायलिङ्गम् ॥ ४॥

सामप्रियं सौम्य महेशलिङ्गं सामप्रदं सौम्य-कटाक्षलिङ्गम् ।
वामाङ्ग-सौन्दर्य-विलोलिताङ्गं वन्दामहे मार्गसहायलिङ्गम् ॥ ५॥

पञ्चाक्षरी-भूत-सहस्रलिङ्गं पञ्चामृतस्नान-परायणाङ्गम् ।
पञ्चामृतांभोज-विलोल-भृङ्गं वन्दामहे मार्गसहायलिङ्गम् ॥ ६॥

वन्दे सुराराधित-पादपद्मं श्रीश्यामवल्ली-रमणं महेशम् ।
वन्दे महामेरु-शरासनं शिवं वन्दा सदा मार्गसहायलिङ्गम् ॥ ७॥

॥ इति श्री मार्गसहायलिङ्ग स्तुतिः संपूर्णा ॥

॥ ॐ तत्सत् ॥